चनीयाः॥ चशब्दाज्जननो परमावपि॥ तथा निषिद्धाचरणे क्रियमाणे जन्मामृहारो वा विनिय
पतनरूपागतपः॥ तथा आधयो मनःपीडा आधयश्च न्याः तिसाराद्याः शारीराः क्लेशा अवि
द्यास्मिता रागद्वेषाभिनिवेशाः पंच॥ जरावलीपलिताद्यभिभवः रूपविपर्ययः रुजंकुजन्ता
दिनाशाकनस्वरूपस्याभयाभावः॥ तथा च स्वशरीरकरवे रोगाद्यनेकजातिभवतः स्मृतिः न पा
दुष्टस्याः प्राप्तिर्निष्टस्य प्राप्तिरित्यादिदुःखं नरकेशावहं संसाररूपं पर्यालोच्यात्मपरिहारार्थमा
त्मज्ञानोपायभूतेषु प्रयत्नेषु प्रयतेत॥ एवं भवे सानं तरं किं कार्यमित्यत आह॥ ध्यानयोगेन
संपश्येत् सूक्ष्ममात्मानमवस्थितः॥ योगाश्चितवृत्तेरात्मैकाग्रताध्यानं तस्य एवं तस्य विषयत्वो
परमः ध्यानयोगेन निदिध्यासनापरपर्यायेण सूक्ष्मः शरीरप्राणादिव्यतिरिक्तः॥ तेजस्त आ
त्मनिवसन् एवं स्थितरिसंवेतन्तं पदार्थयोर्भेदं सम्यक् पश्येद् परोक्षीकुर्यात्॥ अत एव श्रुतौ॥
आत्मा द्रष्टव्यः इति साक्षात्काररूपदर्शनमनूद्य तत्साधनत्वेन श्रोतव्यो मंतव्यो निदिध्यासितव्य
इति श्रवणमनननिदिध्यासनानि विहितानि॥ किंच नात्मनः कारणं धर्मैः क्रियमाणैर्भवेद्दिसः॥

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

म कुर्वन्नष्टुद्धांतःकरणः सन्नद्वैतसाक्षात्कारेण मुक्तो भवति मुक्तो भवति किं च कर्माशय
शुद्धिस्तु भिक्षुकेण विशेषतः ज्ञानोत्पत्तिनिमित्तत्वात् स्वांतःकरणस्य च ॥ विषयाभिलाषज
नितदोषकलुषितस्वांतःकरणस्य शुद्धिः कल्मषदग्धः प्राणायामैः कर्त्तव्या ॥ तस्याः
शुद्धात्माऽद्वैतसाक्षात्काररूपज्ञानोत्पत्तिनिमित्तत्वात् एवं सति विषयासक्तिजनितदो
षात्मकेमति बंधहेतयेस्मात्मध्यानधारणादौ स्वांतत्वोभवति ॥ भिक्षुकेण त्वेषा शुद्धिर्विशेष
तोऽनुष्ठेया तस्य मोक्षप्रधानत्वात् ॥ मोक्षस्य च शुद्धांतःकरणतामंतरेण दुःसाध्यत्वात् ॥ य
थाह मनुः दह्यंते ध्मायमानानां धातूनां हि यथा मलाः ॥ तथेंद्रियाणां दह्यंते दोषाः प्राणस्य
निग्रहादिति ॥ इंद्रियनिरोधोपायत्वाया संसारस्वरूपनिरूपणमाह ॥ अवेक्ष्या गर्भवासाश्च
कर्मजा गतयस्तथा ॥ आधयो व्याधयः क्लेशा जरा रूपविपर्ययः ॥ भवो जातिसहस्रेषु प्रियाप्रि
यविपर्ययः ॥ वैराग्यसिद्ध्यर्थं मुमुक्षुणा पूर्वोक्तनानाविधगर्भवासाद्यवेक्षणीयाः पर्य्यालो

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham